स्वर–सन्धिः – सूत्रसहिता दृष्टिः

सूत्रेषु विभक्ति–अर्थः

षष्ठीविभक्तिः = स्थाने
सप्तमीविभक्तिः = पूर्वकार्यम्
पञ्चमीविभक्तिः = परकार्यम्
प्रथमाविभक्तिः = आदेशः, आगमः, नामकरणम्

१. सवर्णदीर्घसन्धिः

**अकः सवर्णे दीर्घः** (६.१.१०१) = अक्–वर्णात् सवर्णे अचि परे पूर्वपरयोः स्थाने दीर्घसंज्ञक–एकादेशः स्यात् | अक् प्रत्याहारः = अ, इ, उ, ऋ, ऌ | अकः पञ्चम्यन्तं, सवर्णे सप्तम्यन्तं, दीर्घः प्रथमान्तं, त्रिपदमिदं सूत्रम् | **इको यणचि** (६.१.७७) इत्यस्मात् **अचि** इत्यस्य अनुवृत्तिः; **एकः पूर्वपरयोः** (६.१.८४), **संहितायाम्** (६.१.७१) इत्यनयोः अधिकारः | अनुवृत्ति–सहितसूत्रम्— **अकः सवर्णे अचि पूर्वपरयोः एकः दीर्घः संहितायाम्** |

**तुल्यास्यप्रयत्नं सवर्णम्** (१.१.९) = तालु–आदीनि स्थानानि, आभ्यन्तर–प्रयत्नाः, आभ्यां मानाभ्यां यस्य वर्णस्य येन वर्णेन सह तौल्यं, तयोः वर्णयोः सवर्णसंज्ञा स्यात् | सवर्णसंज्ञा विधायक–सूत्रम् | तुल्यः नाम सदृशः | आस्यम् [अस् + ण्यत्] नाम मुखे सञ्जायते यत् | तुल्यं च तुल्यश्च तुल्यौ, आस्यञ्च प्रयत्नश्च आस्यप्रयत्नौ, तुल्यौ आस्यप्रयत्नौ ययोः तत्तुल्यास्यपयत्नं, द्वन्द्वगर्भः बहुव्रीहिः | तुल्यास्यप्रयत्नं प्रथमान्तं, स्वर्णं प्रथमान्तं, द्विपदमिदं सूत्रम् | सूत्रं स्वयं सम्पूर्णम्— **तुल्यास्यप्रयत्नं सवर्णम्** |

वर्णद्वयं यदा मुखस्य समाने स्थाने, समानेन आभ्यन्तरप्रयत्नेन च उच्चार्यते, तदा तस्य वर्णद्वयस्य सवर्णसंज्ञा भवति | कस्यचित् वर्णस्य उच्चारणार्थं मुखे किञ्चन स्थानं भवति, मुखस्य अन्तः कश्चन प्रयत्नः भवति (आभ्यन्तरप्रयत्नः इति), अपि च मुखात् बहिः कश्चन प्रयत्नः भवति (बाह्यप्रयत्नः इति) | स्थानानि = कण्ठः, तालु, मूर्धा, दन्ताः, ओष्ठौ इत्यादिकम् | आभ्यन्तरप्रयत्नाः इत्युक्ते स्पृष्टः, ईषत्स्पृष्टः, ईषद्विवृतः, विवृतः संवृतः चेति | बाह्यप्रयत्नाः इत्युक्ते विवारः, संवारः, श्वासः, नादः, घोषः, अघोषः, अल्पप्राणः, महाप्राणः, उदात्तः, अनुदात्तः, स्वरितः चेति | धेयं यत् सावर्ण्यार्थं केवलं मुखस्य अन्तः यत् स्थानम् अपि च यः आभ्यन्तरप्रयत्नः सः, एते एव द्वे तत्त्वे अपेक्ष्येते | बाह्यप्रयत्नः अस्मिन् विषये नैवान्तर्भूतः | अनेन अ, आ अपि च सर्वे अष्टादश अकाराः इत्येषां सावर्ण्यं भवति | एषां वर्णानां स्थानं कण्ठः, आभ्यन्तरप्रयत्नः विवृतश्च |

२. गुणसन्धिः

**अदेङ्गुणः** (१.१.२) = ह्रस्व–अकारः, एकारः, ओकारः (एङ्) एषां वर्णानां गुणसंज्ञा स्यात् | अत् एङ् च गुणसंज्ञः स्यात् इति | अत् च एङ् च अदेङ् | अदेङ् प्रथमान्तं, गुणः प्रथमान्तं, द्विपदमिदं सूत्रम् | सूत्रं स्वयं सम्पूर्णम्— **अत् एङ् गुणः** |

**आद्गुणः** (६.१.८७) = अ–वर्णात् अचि परे पूर्वपरयोः स्थाने गुणसंज्ञकः एकादेशः स्यात् | अत्र **अचि परे** इत्यस्य **इकि परे** इति फलितः अर्थः यतः अकारात् अकारः चेत् कार्यं बाधितम् **अकः सवर्णे दीर्घः** इत्यनेन; अकारात् एच् चेत् कार्यं बाधितं **वृद्धिरेचि** इत्यनेन सूत्रेण च |

आत् पञ्चम्यन्तं, गुणः प्रथमान्तं, द्विपदमिदं सूत्रम् | **इको यणचि** (६.१.७७) इत्यस्मात् **अचि** इत्यस्य अनुवृत्तिः; **एकः पूर्वपरयोः** (६.१.८४), **संहितायाम्** (६.१.७१) इत्यनयोः अधिकारः | अनुवृत्ति-सहितसूत्रम्— **आत् अचि पूर्वपरयोः एकः गुणः संहितायाम्** |

**उरण् रपरः** (१.१.५१) = ऋकारस्य स्थाने यदा अण्-आदेशः भवति, तदा सः अण् सदा रपरः स्यात् | ऋकारेण त्रिंशत्-प्रकारकः ऋकारः भवति इति बोध्यम् | रः परो यस्य सः रपरः | उः षष्ठ्यन्तम्, अण् प्रथमान्तम्, रपरः प्रथमान्तम्, त्रिपदमिदं सूत्रम् | **स्थानेऽन्तरतमः** (१.१.५०) इत्यस्मात् **स्थाने** इत्यस्य अनुवृत्तिः | अनुवृत्ति-सहितसूत्रम्— **उः स्थाने अण् रपरः** |

३. वृद्धिसन्धिः

**वृद्धिरादैच्** (१.१.१) = आकारः ऐकारः, औकारः (ऐच्) एषां वर्णानां वृद्धिसंज्ञा स्यात् | वृद्धिः प्रथमान्तम्, आदैच् प्रथमान्तं, द्विपदमिदं सूत्रम् | सूत्रं स्वयं सम्पूर्णम्— **वृद्धिः आत् ऐच्** |

**वृद्धिरेचि** (६.१.८८) = अवर्णात् एचि परे पूर्वपरयोः स्थाने वृद्धिसंज्ञक-एकादेशः स्यात् | वृद्धिः प्रथमान्तम्, एचि सप्तम्यन्तं, द्विपदमिदं सूत्रम् | **आद्गुणः** (६.१.८७) इत्यस्मात् आत् इत्यस्य अनुवृत्तिः; **एकः पूर्वपरयोः** (६.१.८४), **संहितायाम्** (६.१.७१) इत्यनयोः अधिकारः | अनुवृत्ति-सहितसूत्रम्— **आत् एचि पूर्वपरयोः एकः वृद्धिः संहितायाम्** |

४. यण्-सन्धिः

**इको यणचि** (६.१.७७) = इकः स्थाने यण्-आदेशः स्यात् अचि परे संहितायां विषये | इकः यण् स्यात् असवर्णे अचि परे इति सूत्रस्य फलितः अर्थः इति ज्ञेयम् (सवर्णे अचि परे **अकः सवर्णे दीर्घः** इत्येनेन यण् बाधितम्) | इकः षष्ठ्यन्तं, यण् प्रथमान्तं, अचि सप्तम्यन्तं, त्रिपदमिदं सूत्रम् | **संहितायाम्** (६.१.७१) इत्यस्य अधिकारः | अनुवृत्ति-सहितसूत्रम्— **इकः यण् अचि संहितायाम्** |

५. यान्तवान्तादेशसन्धिः

**एचोऽयवायावः** (६.१.७७) = एचः (ए, ओ, ऐ, औ इत्येषां) स्थाने क्रमेण अय्, अव्, आय्, आव् इत्यादेशाः भवन्ति अचि परे | क्रमेण इत्युक्तं **यथासंख्यमनुदेशः समानम्** (१.३.१०) इति परिभाषा सूत्रस्य साहाय्येन | अय् च, अव् च, आय् च, आव् च, तेषाम् इतरेतरद्वन्द्वः, अयवायावः | एचः षष्ठ्यन्तम्, अयवायावः प्रथमान्तं, द्विपदमिदं सूत्रम् | **इको यणचि** (६.१.७६) इत्यस्मात् **अचि** इत्यस्य अनुवृत्तिः; **संहितायाम्** (६.१.७१) इत्यस्य अधिकारः | अनुवृत्ति-सहितसूत्रम्— **एचः अयवायावः अचि संहितायाम्** |

Swarup – November 2013 (updated May 2015)